३१ वर्णे चानित्ये ।
३२ रक्ते ।
३३ कालाच्च ।
३४ विनयादिभ्यष्ठक् ।
३५ वाचो व्याहृतार्थायाम् ।
३६ तद्युक्तात्कर्मणोऽण् ।
*अणूप्रकरणे कुलालवरुडनिषादचण्डालामित्रेभ्यश्छन्दसि ॥ १ ॥
*भागरूपनामभ्यो धेयः ॥ २ ॥
*मित्राच्छन्दसि ॥ ३ ॥
*अणमित्राच्च ॥ ४ ॥
*आग्नीध्रसाधारणादञ् ॥ ५ ॥
*अयवसमरुद्भ्यां छन्दसि ॥ ६ ॥
*नवसूरमर्तयविष्ठेभ्यो यत् ॥ ७ ॥
*क्षेमाद्यः ॥ ८ ॥
३७ ओषधेरजातौ ।
३८ प्रज्ञादिभ्यश्च ।
३९ मृदस्तिकन् ।
४० सस्नौ प्रशंसायाम् ।
४१ वृकज्येष्ठाभ्यां तिल्तातिलौ च च्छन्दसि ।
४२ बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् ।
*बह्वल्पार्थान्मङ्गलामङ्गलवचनम् ॥ १ ॥
४३ संख्यैकवचनाच्च वीप्सायाम् ।
४४ प्रतियोगे पञ्चम्यास्तसिः ।
*तसिप्रकरण आद्यादिभ्य उपसंख्यानम् ॥ १ ॥
४५ अपादाने चाहीयरुहोः ।
४६ अतिग्रहाव्यथनक्षेपेष्वकर्तरि तृतीयायाः ।
४७ हीयमानपापयोगाच्च ।
४८ षष्ठ्या व्याश्रये ।
४९ रोगाच्चापनयने ।
५० कृभ्वस्तियोगे संपद्यकर्तरि च्विः ।
*च्विविधावभूततद्भावग्रहणम् ॥ १ ॥
*प्रकृतिविवक्षाग्रहणं वा ॥ २ ॥
*समीपादिभ्य उपसंख्यानम् ॥ ३ ॥
५१ अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च ।
५२ विभाषा साति कार्त्स्न्ये ।
५३ अभिविधौ संपदा च ।
५४ तदधीनवचने ।
५५ देये त्रा च ।
५६ देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम् ।
५७ अव्यक्तानुकरणाद्द्व्यजवरार्धादनितौ डाच् ।
*डाचि चित्करणं विशेषणार्थम् ॥ १ ॥

५८ कृञो द्वितीयतृतीयशम्बबीजात् कृषौ ।
५९ संख्यायाश्च गुणान्तायाः ।
६० समयाच्च यापनायाम् ।
६१ सपत्त्रनिष्पत्त्रादतिव्यथने ।
६२ निष्कुलान्निष्कोषणे ।
६३ सुखप्रियादानुलोम्ये ।
६४ दुःखात् प्रातिलोम्ये ।
६५ शूलात् पाके ।
६६ सत्यादशपथे ।
६७ मद्रात् परिवापणे ।
६८ समासान्ताः ।
*प्रयोजनमव्ययीभावद्विगुद्वन्द्वतत्पुरुषबहुव्रीहिसंज्ञाः ॥ १ ॥
६९ न पूजनात् ।
*पूजायां स्वतिग्रहणम् ॥ १ ॥
*प्राग्बहुव्रीहिग्रहणं च ॥ २ ॥
७० किमः क्षेपे ।
७१ नञस्तत्पुरुषात् ।
७२ पथो विभाषा ।
७३ बहुव्रीहौ संख्येये डजबहुगणात् ।
*डच्प्रकरणे संख्यायास्तत्पुरुषस्योपसंख्यानं निस्त्रिंशद्यर्थम् ॥ १ ॥
*अन्यत्राधिकलोपात् ॥ २ ॥
७४ ऋक्पूरब्धूःपथामानक्षे ।
७५ अच्प्रत्यन्ववपूर्वात् सामलोम्नः ।
७६ अक्ष्णोऽदर्शनात् ।
७७ अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तन्दिवरात्रिन्दिवाहर्दिवसरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः ।
*चतुरोऽच्प्रकरणे त्र्युपाभ्यामुपसंख्यानम् ॥ १ ॥
७८ ब्रह्महस्तिभ्यां वर्चसः ।
७९ अवसमन्धेभ्यस्तमसः ।
८० श्वसोऽवसीयः श्रेयसः ।
८१ अन्ववतप्ताद्रहसः ।
८२ प्रतेरुरसः सप्तमीस्थात् ।
८३ अनुगवमायामे ।
८४ द्विस्तावा त्रिस्तावा वेदिः ।
८५ उपसर्गादध्वनः ।
८६ तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः ।

८७ अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः ।
*अहर्ग्रहणं द्वन्द्वार्थम् ॥ १ ॥
८८ अह्नोऽह्न एतेभ्यः ।
*अह्नोऽह्नवचनानर्थक्यं चाह्नष्टखोर्नियमवचनात् ॥ १ ॥
८९ न संख्यादेः समाहारे ।
९० उत्तमैकाभ्यां च ।
९१ राजाहःसखिभ्यष्टच् ।
९२ गोरतद्धितलुकि ।
९३ अग्राख्यायामुरसः ।
९४ अनोश्मायःसरसां जातिसंज्ञयोः ।
९५ ग्रामकौटाभ्यां च तक्ष्णः ।
९६ अतेः शुनः ।
९७ उपमानादप्राणिषु ।
९८ उत्तरमृगपूर्वाच्च सक्थ्नः ।
९९ नावो द्विगोः ।
१०० अर्धाच्च ।
१०१ खार्याः प्राचाम् ।
१०२ द्वित्रिभ्यामञ्जलेः ।
१०३ अनसन्तान्नपुंसकाच्छन्दसि ।
१०४ ब्रह्मणो जानपदाख्यायाम् ।
१०५ कुमहद्भ्यामन्यतरस्याम् ।
१०६ द्वन्द्वाच्चुदषहान्तात् समाहारे ।
१०७ अव्ययीभावे शरत्प्रभृतिभ्यः ।
१०८ अनश्च ।
१०९ नपुंसकादन्यतरस्याम् ।
११० नदीपौर्णमास्याग्रहायणीभ्यः ।
१११ झयः ।
११२ गिरेश्च सेनकस्य ।
११३ बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच् ।
*षचि प्रत्ययान्तरकरणमनन्तोदात्तार्थम् ॥ १ ॥
११४ अङ्गुलेर्दारुणि ।
११५ द्वित्रिभ्यां ष मूर्ध्नः ।
*मूर्ध्नश्च षवचनम् ॥ १ ॥
११६ अप्पूरणीप्रमाण्योः ।
*अपि प्रधानपूरणीग्रहणम् ॥ १ ॥
*नेतुर्नक्षत्रे उपसंख्यानम् ॥ २ ॥
*छन्दसि च ॥ ३ ॥
*मासात् भृतिप्रत्ययपूर्वपदाट्ठज्विधिः ॥ ४ ॥
११७ अन्तर्बहिर्भ्यां च लोम्नः ।
११८ अञ्नासिकायाः संज्ञायां नसं चास्थूलात् ।
११९ उपसर्गाच्च ।
१२० सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणी-
पदाजपदप्रोष्ठपदाः ।
१२१ नञ्दुःसुभ्यो हलिसक्थ्योरन्यतरस्याम् ।
१२२ नित्यमसिच् प्रजामेधयोः ।
१२३ बहुप्रजाश्छन्दसि ।
१२४ धर्मादनिच् केवलात् ।
१२५ जम्भा सुहरिततृणसोमेभ्यः ।
१२६ दक्षिणेर्मा लुब्धयोगे ।
१२७ इच् कर्मव्यतिहारे ।
१२८ द्विदण्ड्यादिभ्यश्च ।
१२९ प्रसम्भ्यां जानुनोर्ज्ञुः ।
१३० ऊर्ध्वाद्विभाषा ।
१३१ ऊधसोऽनङ् ।
*ऊधसोऽनङि स्त्रीग्रहणम् ॥ १ ॥
१३२ धनुषश्च ।
१३३ वा संज्ञायाम् ।
१३४ जायाया निङ् ।
१३५ गन्धस्येदुत्पूतिसुसुरभिभ्यः ।
*गन्धस्येत्त्वे तदेकान्तग्रहणम् ॥ १ ॥
१३६ अल्पाख्यायाम् ।
१३७ उपमानाच्च ।
१३८ पादस्य लोपोऽहस्त्यादिभ्यः ।
१३९ कुम्भपदीषु च ।
१४० संख्यासुपूर्वस्य ।
१४१ वयसि दन्तस्य दतृ ।
१४२ छन्दसि च ।
१४३ स्त्रियां संज्ञायाम् ।
१४४ विभाषा श्यावारोकाभ्याम् ।
१४५ अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च ।
१४६ ककुदस्यावस्थायां लोपः ।
१४७ त्रिककुत् पर्वते ।
१४८ उद्विभ्यां काकुदस्य ।
१४९ पूर्णाद्विभाषा ।
१५० सुहृद्दुर्हृदौ मित्रामित्रयोः ।
१५१ उरःप्रभृतिभ्यः कप् ।
१५२ इनः स्त्रियाम् ।
१५३ नद्यृतश्च ।
१५४ शेषाद्विभाषा ।
१५५ न संज्ञायाम् ।
१५६ ईयसश्च ।
*ईयस उपसर्जनदीर्घत्वं च ॥ १ ॥
*पुंवद्वचनात्सिद्धम् ॥ २ ॥
१५७ वन्दिते भ्रातुः ।
१५८ ऋतश्छन्दसि ।
१५९ नाडीतन्त्र्योः स्वाङ्गे ।
१६० निष्प्रवाणिश्च ।

चतुर्थपञ्चमाध्यायगतसूत्रवार्तिकपाठः समाप्तः ॥